छाया—हञ्जे चतुरिके किमिदं आर्यमहोदरहस्तात् पतितम् ।

चतु—सामिणिएदं किंवि चित्तफळअम् ।

छाया—स्वामिनि ! इदं किमपि चित्रफलकम् ।

वसु—ता उवणेहि पेक्खामो ।

छाया—तदुपनय प्रेक्षामहे ।

चतु—(उपनीय समर्पयति)

वसु—(विलोक्य अपवार्य) हञ्जे चउरिए सच्चं एव्व तुए भणिदम् । एत्थ कावि कण्णआ आळिहिदा दीसइ ।

छाया—हञ्जे चतुरिके सत्यं एव त्वया भणितम् । अत्र कापि कन्यका आलिखिता दृश्यते ।

चतु—मए कहं सामिणीए पुरदो सच्चं भणीअदि ।

छाया—मया कथं स्वामिन्याः पुरतः असत्यं भण्यते ।

वसु—(राजानं प्रति) अआउत्त एत्थ चित्तफळए का एसा कण्णआ आळिहिदा दीसइ । को एसो पुरुसो ।

छाया—आर्यपुत्र अत्र चित्रफलके का एषा कन्यका आलिखिता दृश्यते । क एष पुरुषः ।

राजा—(अपवार्य) सखे किमस्मिन्नवसरे भणितव्यम् ।

विदू—(अपवार्य) मा भआहि । अहं से उत्तरं देमि ।

छाया—मा भैषीः । अहं तस्याः उत्तरं ददामि ।

(वसुमतीं प्रति) देवि सुणीअदु पिअवअस्सस्स महअदोण्णवि अळेक्खविण्णाण-विसए पइण्णा कआआसि दुवेहिं अह्मेहिं णिव्वत्तिअं अ आळेक्खकम्म कस्स उण आळेक्खविण्णाणविसए कोसळन्ति जाणिदुं अम्हे उण एदस्सिं विसए विवदमाणा वट्टामहे । इमस्सिं अवसरे विवादणिण्णअ विअड्ढा तुमं आअदासि । एव्वं कअपअण्णेहिं अह्मेहिं रुवपन्ताणं पुढमदंसण भूदारई कामदेवा एत्थ आळिहिदा । पिअवअस्सेण अअं कामदेवो आळिहिदो । इअं मए रई आळिहिदा । ता पेक्खदोण्ण विण्णाणविसए कस्स पंडिच्चं आहिअ अरन्ति तुमं एव्व विण्णहि ।

छाया—देवि ! शृणोतु । प्रियवयस्येन महत्येवालेख्यविन्यासविषये प्रतिज्ञा कृता आसीत् । द्वाभ्यामावाभ्यां निर्वर्तितश्चालेख्यकर्म । कस्य पुनरालेख्य-विन्यासविषये कौशलमिति ज्ञातुम् । आवां पुनरेतस्मिन्विषये विवदमानौ

वर्तावहे । अस्मिन्नवसरे विवादनिर्णयविदग्धा त्वमागतासि । एवं कल्पयमानाभ्यामावाभ्यां रूपवतां प्रथमदर्शनभूतौ प्रियवयस्येनायं कामदेव आलिखितः । इयं मया रतिरालिखिता । तत् प्रेक्षस्व द्वयोर्विन्यासविषये (द्वन्द्वविन्यासविषये) कस्य पांण्डित्यमधिकतरमिति त्वमेव विजानासि ।

राजा—

(जं जं इत्यादिश्लोकमन्वाच्य)

(जं जं ळिहिज्जमाणं
अप्पणअं तुज्झपाणिणा अंगम् ।
जइ सा विळोअइस्सदि
तंतं रोमंचिअं भवेतस्स ॥)

छाया—

यद्यत् लिख्यमानं
अप्रतिमं नव पाणिना अङ्गम् ।
यदि सा विलोकयिष्यति
तत् तत् रोमाञ्चितं भवेत्तस्याः ॥

सत्यमुक्तं वयस्येन ।

वसुमती—होदु । तम्हेहिं दुवेहिं रई कामदेवा इव एत्थ आळिहिदा । पिअअणं उद्दिसिअ अअं सुळोको ण अळिहिदो ।

छाया—भवतु । युवाभ्यां द्वाभ्यां रतिकामदेवावेवात्रालिखितौ । प्रियतमामुद्दिश्यायं श्लोकः नालिखितः ।

विदूषकः—(विचिन्त्य) कामदेवं उद्दिसिअ रई आळिहिदो सुळोओ णूणं भविस्सदि ।

छाया—कामदेवमुद्दिश्य रत्या आलिखितः श्लोकः नूनं भविष्यति ।

वसुमती—(सरोषम्) णहि णहि । रइं उद्दिसिअ अअअउत्तेण इअं कण्णआ आळिहिदत्ति भणिदण्णम् ।

छाया—नहि नहि । रतिमुद्दिश्य आर्यपुत्रेणेयं कन्यका आलिखितेति भणितव्यम् ।

राजा—(सानुस्मरणम्)

क्व पुनश्चित्रविवादः
क्व पुनस्तव देवि कोपसंरम्भः ।
संप्रति दयिते दैवा-
दन्यदुपक्रान्तमन्यदापतितम् ॥ २५ ॥

वसुमती—जाणामि अउअउत्तस्स अवसरोइदालाववेअड्ढअम् जस्स अअं अवहिरिअ विहीपदप्पञ्चुप्पण्मई अह्म महोदरओ अमच्चो ।

छाया—आनाम्यार्यपुत्रस्य अवसरोचितालापवैदग्ध्यं यस्यायमवधीरितविधिप्रत्युत्पन्नमतिः अस्मन्महोदरः अमात्यः ।

विदूषकः—देवि मा एव्वं भण । आळावकुसळं भट्टारं कद्दिसिअ णिट्ठुरालावळेक्खं करेहि ।

छाया—देवि मैवं भण । आलापकुशलं भर्तारं (उद्दिश्य) निष्ठुरालाप (लक्षणं) करोषि ।

राजा—

अमृतकरबिम्बमेत-
न्मुञ्चति किमिति प्रसादमात्मीयम् ।
कोणेन शोणिमानं
कुवलययुगलञ्च किमिति संधत्ते ॥ २६ ॥

वसुमती—हञ्जे चउरिए! इमिणा चित्तवुत्ततेण महदी सीरवेअणा संवुत्ता । ता इमं गह्ला चित्तफळअं अन्तेउरं गमिस्सामो ।

छाया—हञ्जे चतुरिके! अनेन चित्रफलकवृत्तान्तेन महती शिरोवेदना संवृत्ता । तदिमं गृहाण चित्रफलकम् । अन्तःपुरं गमिष्यामः ।

चतुरिका—तहा ।

छाया—तथा ।

(चित्रफलकहस्तया चतुरिकया सह कुपिता देवी निष्क्रान्ता)

राजा—(सविषादमात्मगतम्)

देव्यां दाक्षिण्यमेतन्निरतिशयमिदं प्रेम तस्यां प्रियायां
इत्थं भावद्वयेन प्रथयति हृदयं हन्त डोलानुकारम् ।
किञ्च त्रैलोक्यवीरो विरहिजनमनोवेधलीलाविदग्धै-
राकर्णकृष्टमुक्तैर्व्यथयति विशिखैरङ्गमङ्गं मनोभूः ॥ २७ ॥

(प्रकाशम्)

अन्तःपुरं प्रविश्य[20] कुपितां देवीं प्रसादयामः ।

विदूषकः—तह करीअदु ।

छाया--तथा क्रियताम् ।

(इति निष्क्रान्ताः सर्वे)

॥ द्वितीयोऽङ्कः ॥

---

[20] सविमर्शम्.

# अथ तृतीयोऽङ्कः

(ततः प्रविशति निपुणिका)

निपुणिका—आणत्तह्मि देवीए वसुमईए जह निपुणिए कामदेवस्स पूआ णिवत्तणिज्जा। ता इदाइं मोरभवासिअ दिसा मुहाइं कुसुमाइं उज्जाणदो आणेहित्ति। ता देवीए जह आणत्तं तह करोमि। (इति परिक्रामति)

छाया—आज्ञप्तास्मि देव्या वसुमत्या यथा निपुणिके कामदेवस्य पूजा निवर्तनीया। तदिदानीं मोरभ्यवासितदिशामुखानि कुसुमानि उद्यानतः आनयेति। तद् देव्या यथा आज्ञप्तं तथा करोमि।

(प्रविश्य चतुरिका)

चतुरिका—आणत्तं ह्मि देवीए वसुमईए जह चउरिए कामदेवस्स पूआ णिव्वत्तणिज्जा। तहिं भट्टिणो अणुमदीए होदव्वं। ता जस्सिं पदेसे भट्टा वट्टइ तं पदेसं तुम विअरिअ आअच्छेत्ति। पमदवणमण्डपे उण भट्टा वट्टदित्ति विणअंधरेण अभिहिदं। ता इमं वुत्तंतं देवीए णिवेदेमि। (इति परिक्रामति) (निपुणिकां विलोक्य) इअं पअमही णिउणिआ समाअच्छइ। ता उवसप्पामि-णम्।

(इत्युपसर्पति)

छाया—आज्ञप्तास्मि देव्या वसुमत्या यथा चतुरिके कामदेवस्य पूजा निर्वर्तनीया। तस्मिन् भर्तुः अनुमत्या भवितव्यम्। तद् यस्मिन् प्रदेशे भर्ता वर्तते तं प्रदेशं त्वं विचार्य आगच्छेति। प्रमदवनमण्टपे पुनः भर्ता वर्तत इति विनयन्धरेणा-भिहितम्। तदिमं वृत्तान्तं देव्यै निवेदयामि। (इति परिक्रामति) (निपुणिकां विलोक्य) इयं प्रियसखी निपुणिका समागच्छति। तदुपसर्पाम्ये-नाम्।

(इत्युपसर्पति)

निपुणिका—(चतुरिकां दृष्ट्वा) इअं चउरिआ। एणं अळविअ गमिस्सामि। (इत्युपसृत्य) भद्दं खु पअसखीए।

छाया—इयं चतुरिका। एनामालप्य गमिष्यामि। (इत्युपसृत्य) भद्रं खलु प्रियसख्याः।

चतुरिका—पअसहीएव्व पक्खवादेण ।

छाया—प्रियसख्या एव पक्षपातेन ।

निपुणिका—पिअसही एक्कं पुच्छामि तुमं । तं तुए फणिदव्वम् ।

छाया—प्रियसखि एकं त्वां पृच्छामि । तत् त्वया भणितव्यम् ।

चतुरिका—पुच्छ दाव । जं मण्णिज्जइ जं भणीअदि ।

छाया—पृच्छ तावत् । यत् भणितव्यं तत् भण्यते ।

निपुणिका—

पण्डुक्खामं गत्तं दीहरणीसासणिस्सहं वअणम् ।
आण्णारिसीअ सोब्भा परिदीसइ भट्टिणो वट्टा ॥ किं वा ?

छाया—

पाण्डुक्षामं गतं दीर्घनिःश्वासनिःस्सहं वदनम् ।
आन्यादृशीव शोभा परिदृश्यते भर्तुः वार्ता ॥ किं वा ?

चतुरिका—सही किं दे णिह्लवीअदि । किं वि कण्णआरअणं दक्खिअ तस्सि उक्कण्ठिओ भट्टा वट्टइ । कस्स वि तुए ण भणिदव्वम् ।

छाया—सखि किं ते निह्नूयते । किमपि कन्यकारत्नं दृष्ट्वा तस्मिन् उत्कण्ठितो भर्ता वर्तते । कस्यापि त्वया न भणितव्यम् ।

निपुणिका—सही णाहं तारिसी ।
पुव्वं हि चित्तफळअ वुत्तंतेण परिकुविदा देवी किं भट्टिणा पसादिआ ।

छाया—सखि नाहं तादृशी । पूर्वं हि चित्रफलकवृत्तान्तपरिकुपिता देवी किं भर्त्रा प्रसादिता ।

चतुरिका—हिओ एव्व अन्तेउरं पविट्टेण भट्टिणा पणअपेसेळेहिं वअणेहिं पसादिआ भट्टिणी ।

छाया—ह्य एव अन्तःपुरं प्रविष्टेन भर्त्रा प्रणयपेशलैः वचनैः प्रसादिता भट्टिनी ।

निपुणिका—सही चउरिए कामदेवपूआ किं णिमित्तम् ।

छाया—सखि चतुरिके कामदेवपूजा किं निमित्तम् ?

चतुरिका—णिगूहणिज्जं विवत्थू तुह मए एव्व भणिज्जइ । अण्णासंगेण भट्टा देवीए उवरि ईसि विमनाअमाणो विअ वट्टइ । तं अहिमुहं कादुम् ।

छाया—निगूहनीयमपि वस्तु तव मया भण्यते । अन्यासङ्गेन भर्ता देव्या उपरि ईषद् विमनायमान इव वर्तते । तं अभिमुखीकर्तुम् ।

निपुणिका—जुज्जइ । जुज्जइ । तमं उण कहिं गच्छसि ।

छाया—युज्यते । युज्यते । त्वं पुनः कुत्र गच्छसि ।

चतुरिका—भट्टिणो पमदवणमण्डवावट्ठाणं देवीए णिवेदेदु गच्छामि ।

छाया—भर्तुः प्रमदवनमण्टपावस्थानं देव्यै निवेदयितु गच्छामि ।

निपुणिका—अहं देवीए कामदेवपूआ जोग्गाइं कुसुमाइं अवचेदुं उज्जाणभूमिं गमिस्सामि ।

(इति निष्क्रान्ते)

छाया—अहं देव्याः कामदेवपूजायोग्यानि कुसुमानि अवचेतु उद्यानभूमिं गमिष्यामि ।

(इति निष्क्रान्ते)

॥ प्रवेशकः ॥

(ततः प्रविशत्युत्कण्ठितो राजा विदूषकश्च)

राजा—सखे महोदर ! कथमिव दुर्लभां प्रियां पुनरवलोकयामि ।

चित्रे तामवलोकयामि लिखितामित्येव पक्षो भवेत्
देवी तत्फलकापनीतिचतुरा तत्रान्तरायोऽभवत् ।
स्वप्ने चेदवलोकनं मृगदृशो नास्त्येव पक्षोऽपि मे
तच्चिन्ताहृतचेतसो नयनयोर्निद्रा न नेदीयसी ॥ १ ॥

विदूषकः—राजा खु तुमं आणाबळेण णिद्दं णेत्तपहवट्टिणिं करेहि ।

छाया—राजा खलु त्वम् । आज्ञाबलेन निद्रां नेत्रपथवर्तिनीं कुरु ।

राजा—इदमपि नोपपद्यते यतः

दयिताहृतमनसं मामेकाकिनमभ्युपागता चिन्ता ।
चिन्ता गत इति नूनं निद्रा मम नैति नेत्रयोर्विषयम् ॥ २ ॥

विदूषकः—जदि एव्वं ताए चिन्ताए उवणीदसंकप्पमअं पिअं अणुहोंत्तो चिक्ख ।

छाया—यद्येवं तया चिन्तया उपनीतां संकल्पमयीं प्रियां अनुभवन् तिष्ठ ।

राजा—इदमनुपपन्नम् । तथा हि ।

अर्धासनोपवेशनमालिङ्गनमधरपीडनं सुतनोः ।
संकल्पसंभवायाः कथमिव[1] साक्षान्मया सखे लभ्यम् ॥ ३ ॥

विदूषकः—जो जो उवाओ मए उवक्खित्ते सो सो खण्डिअदि तुए; ता तुमं एव्वं चिन्तेहि ।

छाया—यो य उपायो मया उपक्षिप्तः स स खण्डयते त्वया । तत् त्वमेव चिन्तय ।

---

[1] कथमपि

राजा—सखे मया क उपायश्चिन्तनीयः। सर्वथा दुर्लभं प्रियायाः पुनर्दर्शनम्।

यतः –

नीत्वा लोचनगोचरं मम सखे पूर्वं प्रियां दुर्लभां
पश्चादेव दवीयसीं विरचयन्निच्छाविहारी विधिः।
उत्कण्ठां जनयन् मनोभवशरैरङ्गानि विध्यन्मुहुः
क्रीडासाधनतां गतेन हि मया स्वैरं परिक्रीडते ॥ ४ ॥

ततश्च –

मुञ्चन् पञ्चशरः शरानविरळान् आजन्मनस्सञ्चितान्
मध्ये च[2] प्रकटीकरोति रुषितो बाह्वोर्महत् पौरुषम्।
[3]किञ्चामी मलयानिलेन्दुकिरणप्राया मनोहारिणः
हा हा जीवितसंशयप्रणयिनः प्रायो भवन्त्येव मे ॥ ५ ॥

विदूषकः—मा एव्वं कादरो होहि। सव्वहा सिद्धपुरुसो तुह मणोरहसिद्धीणं कारणं भविस्सदि।

छाया—मैवं कातरो भव। सर्वथा सिद्धपुरुषस्तव मनोरथसिद्धीनां कारणं भविष्यति।

राजा—अपि नाम भवेदेवम्।

(प्रविश्य कञ्चुकी)

दौवारिकः—देव द्वारि सिद्धपुरुषः कश्चिदागत्य देवं द्रष्टुमिच्छति।

राजा—तर्हि तमविलम्बितमेव प्रवेशय।

(ततः प्रविशति योगन्धरः)

योगन्धरः—आदिष्टोऽस्मि सिद्धपुरनिवासिना स्वामिना विरूपाक्षसिद्धेन यथा वत्स योगन्धर श्रीपर्वतं गत्वा सकलचमत्कारकारिणीं सिद्धगुळिकामानीयागच्छेति। तदा मन्त्रिदेशसमये कनकलेखासखीभ्यां कोकिलकण्ठीशुकालापिनीभ्यां या य विरहवेदना निवेदिता तस्यास्तामिमां तन्निदानभूतायास्मै विजयवर्मणे निवेदयामि।

(इत्युपसर्पति)

राजा—(विलोक्य) अयमसौ सिद्धपुरुषः। (सप्रश्रयम्) अञ्जलिर्भगवतः।

योगन्धरः—अभिमतसिद्धिरस्तु।

---

2 मध्येव B

3 ते B

राजा—किं नामधेयो भगवान्[4]। किं वा समागमनकारणम् स्वायत्तसिद्धेस्तत्र-भवतः ?

योगन्धरः—स्वामिनो विरूपाक्षसिद्धस्य शिष्यं योगन्धराभिधानमवधारय माम् स्वामिनो निदेशादहं श्रीपर्वतं गत्वा सिद्धगुळिकामानेतुं गमिष्यामि। मा किल कल्याणलक्षणकन्यका त्वया दृष्टा त्वद्दर्शनेनानन्दिता[5] सा त्वत्कृते महतीं वेदनामनुभवति। मन्निदेशसमये तत्प्रियसखीभ्यां कोकिलकण्ठीशुकालापि-नीभ्यां या या विरहवेदना स्वामिने निवेदिता तस्यास्तां भवते निवेदयामि[6]।

राजा—अवहितोऽस्मि।

योगन्धरः—

पुरसूदनस्य कृपया
पुनरवतीर्णमिव पुष्पधन्वानम्।
त्वामवलोक्य वराङ्गी
मदनशराणां महच्छरव्यमभूत्॥ ६॥

राजा—ततस्ततः।

योगन्धरः—

[7]सा धारयत्यनुदिनं तनिमानमङ्गं-[8]
स्तारापतेरसितपक्षगतेव मूर्तिः।
भूयो बिभर्ति नलिनीव हिमानियोगा-
दन्यादृशीं वपुषि रीतिमरालकेशं॥ ७॥

राजा—ततस्ततः।

योगन्धरः—

तापापनोदसमये[9] च [10]तयावगाढं
क्वाथाज्जलं भवति फेनिलितं[11] नलिन्याः।

---

[4] भवान् B

[5] त्वद्दर्शनोन्मादिनी B

[6] तत्प्रियाभ्यां सखीभ्यां B

[7] संधारयति B

[8] आर्गैः B

[9] तापापनोदविधये A

[10] तथा B

[11] फेनिलतां A

वक्त्रेन्दुदर्शनवशादिव तद्गतानि
म्लानच्छवीनि कमलानि भवन्ति तस्याः ॥ ८ ॥

राजा—ततस्ततः ।

योगन्धरः—

अन्तर्विजृम्भितमनोभववेदनायाः
श्वासोष्मणा मृगदृशः कृतवर्णभेदा ।
हारावलिर्भवति तत्क्षणमेव तस्याः
[12]बालेन्द्रनीलमणिथिग्रंभितेव माला ॥ ९ ॥

राजा—महतीं वेदनामनुभवति मत्कृते मञ्जुभाषिणी । ततस्तत ।

योगन्धरः—

सन्धुक्षित इव तस्याः
नलिनीदलतालवृन्तपवनेन ।
अन्तर्मदनकृशानुः
वारं वारं विवृद्धिमाश्रयते ॥ १० ॥

राजा—अवशिष्टं च कथ्यताम् ।

योगन्धरः—

अरुणां प्रवालशय्या-
मङ्गारमयीमवैति[13] तन्वङ्गी ।
हिमवालुकां विकीर्णां
सा मनुते तप्तवालुकामेव ॥ ११ ॥

राजा—सखे महोदर ! महत्कष्टमनुभवति मामन्तरेण हरिणलोचना । ततस्ततः ।

योगन्धरः—

नलिनीदलतालवृन्तमेतत्
तपनस्यात्मनि सञ्चितं प्रतापम् ।
मयि मुञ्चति मारुतापदेशा-
दिति सा ताम्यति वीजने सखीनाम् ॥ १२ ॥

विदूषकः—अह्यो अदिभूमिगदो से मअणज्जरो ।

छाया—अहो । अतिभूमिगतस्तस्याः मदनज्वरः ।

---

12 बालेन्दु A

13 अवैमि B

राजा—किमुच्यते। अतिभूमिगत इति। ततस्ततः।

योगन्धरः—

अभिनवघनसारक्षोदनिर्हारिणीनां
हिमजलकणिकानां जालकैस्सिच्यमानम्।
भवति भसितशेषं गात्रसंयोगमात्रात्
किसलयपरिक्ळुप्तं तल्पमल्पोदरायाः॥ १३॥

राजा—अहो शीतोपचारा अपि मदनाग्नेरिन्धनभावमासादयन्ति।

योगन्धरः—अहमपि

[14]सोढस्त्र्यम्बकलोचनानलशिखातापात् प्रसूनायुधात्
अग्निस्तम्भकरी त्वया क्षितिपते विद्या किमासादिता।
यस्मात्त्वं विरहानलेन महता संतप्यमाने भृशं
तस्याश्चेतसि तादृशेऽपि तनुषे नित्यासिकासाहसम्॥ १४॥

राजा—एवं प्रबलमदनज्वरा कथमिव प्राणान् धारयति।

योगन्धरः—श्रूयताम्—

त्वन्नामधेयकलितैः
त्वद्रूपविशेषवर्णनाभेदैः।
[15]यद्गुणगणनाभ्यासैः
कथमपि धारयति जीवितं बाला॥१५॥

राजा—सखे! महोदर!

अविरचितपक्षपातः
प्रहरत्यनुवेलमात्तसंरम्भः।
मामिव तामपि बालां
मदनः संमोहनेम बाणेन॥ १६॥

योगन्धरः—राजन् मा विषीद। अचिरादेवास्मत्स्वामी विरूपाक्षसिद्धः समागत्य भवन्तमपगतचित्तसंतापं करिष्यति।

राजा—महाननुग्रहः।

योगन्धरः—एतावन्तमुदन्तं भवते निवेद्य गच्छामीत्यागतोऽस्मि।

राजा—श्रुतम् श्रोतव्यम्।

---

[14] सोढस्त्र्य ?

[15] त्वद्.

योगन्धरः—अहमपि गुरुनियोगमनुतिष्ठामि ।

(इति निष्क्रान्तः)

राजा—सखे ! महोदर ! एवं परितप्यमानयोरावयोः क उपायो जीवितावलम्बस्य ।

विदूषकः—पुणोवि अंणोण्णदंसणमंदरेण एत्थि मे अण्णो उवाओ जीविदावळम्बस्स ।

छाया—पुनरपि अन्योन्यदर्शनमंतरेण अस्ति मे अन्यः उपायः जीवितावलम्बस्य ?

राज—तदप्यन्योन्यदर्शनं केन भविष्यतीति न जाने ।

विदूषकः—अहं पुण जाणे । जदि सो महापुरुसो विरूपक्खसिद्धो तुह समीवं आअमिस्सदि । तदो तुह मणोरहसिद्धी भविस्सदि ।

छाया—अहं पुनः जाने । यदि स महापुरुषो विरूपाक्षसिद्धस्तव समीपं आगमिष्यति ततः तव मनोरथसिद्धिः भविष्यति ।

राजा—(दक्षिणतस्पन्दमभिनीय[16])

क्व वयं दूरदेशस्थाः क्व विद्याधरकन्यका ।
मन्दभाग्यस्य मे बाहो किं मुधा स्पन्दसे मुहुः ।। १७ ।।

विदूषकः—(ऊर्ध्वमवलोक्य साश्चर्यम्) विज्जुप्पभाओ विअ कोवि पहा पुञ्जो गगणादोओदरइ ।

छाया—विद्युत्प्रभाव[17] इव कोऽपि प्रभापुञ्जो गगनादवतरति ।

राजा—(विलोक्य सविस्मयम्)

पाणौ वेत्रं पवित्रं भसितविरचितं पुण्ड्रकं फालदेशे
रौद्राक्षं दाम कण्ठे स्फटिकमणिमयं कुण्डलं गण्डसीम्नि ।
वैयाघ्रं चर्मपट्टं कटिभुवि महिते पादुके पादयुग्मे
कन्धां कल्पद्रुमोत्थामपि वपुषि वहन्नेष सिद्धोऽभ्युपैति ।।
(पुनर्निरूप्य) नूनं मदनुग्रहाय द्वितीय इव
विरूपाक्षो विरूपाक्षसिद्धः अयं गगनतलादवतरति ।।
सखे अर्घ्यमानीयताम् । (उत्थाय)
भवत्पादपांसुपरमाणुः[18] विजयवर्मा प्रणमति ।।

विरूपाक्षः—(अवतीर्य) अचिरादेवाभिमतार्थसिद्धिमनुभूया ।[19]

---

[16] दक्षिणाक्षि-स्पन्दमभिनीय दक्षिणदो A.

[17] विभाओ A.

[18] परमाणु B.

[19] अभिमतसिद्धि A.

राजा—भगवन् ! कृतार्थोऽस्मि । तत्परिगृह्यतामर्घ्यम् ।

विरूपाक्षः—(अर्घ्यप्रतिग्रहमभिनयति)

विदूषकः—(आसनमुपनयति)

विरूपाक्षः—(उपविशति)

राजा—

नित्यानित्यविवेक-
व्यपगतभोगाभिलाषबन्धानाम् ।[20]
स्वायत्तकामनानां
कृपणजने[21] किमिति जायते करुणा ॥ १८ ॥

विरूपाक्षः—(सस्मितम्) मैवं भाषिष्ठाः । सर्वाश्रमोपकारिणां गृहमेधिनां गृहेषु भिक्षुजनेन जीवितव्यम् । तत्रापि ब्रह्मस्तम्बकुटुम्बिनं भवन्तं विलोकयितुमभिलषति कस्य वा न चेतः ।

राजा—यद्येवमनुगृहीतोऽस्मि ।

विरूपाक्षः—(राजानं विलोक्य) किं भवान् परिवर्तिताकृतिरिव विभाव्यते ।[22]

राजा—अचार्मणचक्षुषाऽपरोक्षितब्रह्मज्योतिषामधिगतभूतभवद्भविष्यवतां महतां किमस्त्यविज्ञातम् । ततो मामजानन्निव तत्रभवान् किमिति विप्रलभते ।[23]

विरूपाक्षः—जानामि वीरवर्मदुहितरि कनकलेखायामासक्तचित्तं प्रसवशरपीडितं भवन्तम् । सा च राजकन्यका त्वद्दर्शनात्प्रभृति यादृशो भवान् तादृशी वर्तते ।

राजा—एवमुत्कण्ठमानयोरावयोः येन जीवितालंबो भविष्यति तमुपायं चिन्तयितुमर्हति तत्रभवान् ।

विरूपाक्षः—पुनरन्योन्यदर्शनमन्तरेण नास्त्यपर उपायो जीवितावलम्बस्य ।

विदूषकः—कहिदं खु मए जह महापुरुसेण भणिदम् ।

छाया—कथितं खलु मया यथा महापुरुषेण भणितम् ।

राजा—तत्रापि स्वाधीनसकलसिद्धिस्तत्रभवानेव प्रगल्भते ।

विरूपाक्षः—राजन् ! मा विषीद । आकर्षणविद्यया तां राजकन्यकामानीय भवते समर्पयामि ।

राजा—महाननुग्रहः ।

---

[20] अभिलाषणान्धानाम् A.

[21] श्रवणजने A.

[22] भाव्यते A.

[23] अचार्मणज्ञनचक्षुषा B.

विरूपाक्षः—आकर्षणमन्त्रानुसन्धानमभिनयति ।

(ततः प्रविशति आकाशमार्गेण कनकलेखा)

कनकलेखा—वम्मह तावावणोदणत्थं कदळीघरं पविट्ठा अहं केणवि आणिज्जमाणेव्व कुदोवि गअणमग्गेण गच्छामि । (किञ्चिदध्वानं गत्वा, अधोऽवलोक्य) इदं किं विओहसिअ सिद्धिउरं णअरम् । एदं किंवि राअभवणम् । एदं किंवि णंदणरमणिज्जं उज्जाणम् एत्थ अपुरुसेहिं दुवेहिं उवट्ठिओ कोवि राआ चिट्ठइ । ता अवदरामि ।

(इत्यवतरति)

छाया—मन्मथतापापनोदार्थं कदलीगृहं प्रविष्टा अहं केनापि आनीयमानेव कुतोपि गगनमार्गेण गच्छामि । (किञ्चिदध्वानं गत्वा, अधोऽवलोक्य) इदं किमपि अपहसितसिद्धपुरं नगरम् । एतत् किमपि राजभवनम् । एतत् किमपि नन्दनरमणीयं उद्यानम् । अत्र च पुरुषाभ्यां द्वाभ्यां उपस्थितः कोऽपि राजा तिष्ठति । तदवतरामि ।

(इत्यवतरति)

राजा—(ऊर्ध्वमवलोक्य, सहर्षम्)

अवनितलमवतरन्ती
विद्युल्लेखेव जलधराद्गलिता ।
आयाति कनकलेखा
महतां हा हन्त मन्त्रसिद्धिरियम् ॥ १९ ॥

विरूपाक्षः—राजन् ! प्रत्यासीदति ते प्रियतमा । अनया सह ससल्लापः[24] स्थीयताम् । अङ्गनान्तरसमागमनप्रसङ्गे पुनरियं क्वापि भवता निगूहनीया । अहं तावन्नन्दनवनं गत्वा पुनरप्यागमिष्यामि । (इति तिरस्करिणीमभिनीय निष्क्रान्तः)

विदूषकः—अहं वि जह ण कोवि इमं पदेसं आअच्छेत्तह दुवाररक्खी होह्मि । (किञ्चिदन्तरं गत्वा द्वारदेशान्तरित विग्रहः तिष्ठति)

छाया—अहमपि यथा न कोऽपि इमं प्रदेशं आगच्छेत् तथा द्वाररक्षी भवामि ।

कनकलेखा—(अधोऽवलोक्य सप्रत्यभिज्ञम्) अअं खु उज्जाणदिट्ठो महउक्कठादाणणिउणो महापुरुसो जस्स खु परिच्छंददंसणं[25] चित्तफळए आसि ; इत्थ उण तईअं दंसणं दिट्ठिआ जाअम् ।

(इत्यवतरति)

---

[24] संलप्य B.

[25] बीजदंसणं A.

छाया—अयं खलु उद्यानदृष्टो मम उत्कण्ठादाननिपुणो महापुरुषो यस्य खलु प्रतिछंददर्शनं चित्रफलके आसीत्। अत्र पुनः तदीयं दर्शनं दिष्ट्या जातम्।

राजा—सत्यम्। ममागतैव मे प्रिया।[26]

कनकलेखा—(अवतीर्य सस्पृहम् सलज्जं चावनतमुखी तिष्ठति)

राजा—एह्येहि प्राणवल्लभे।

अतनुविरहतप्तं दर्शितं[27] पाण्डुभावै-
रमृतलहरिशीतैरङ्गमङ्गैर्निपीड्य।
मम सुतनु मनोज्ञामद्य[28] दत्वाङ्कपालीं
मनसिजरुजमेनामर्हसि त्वं विनेतुम्॥ २०॥

कनकलेखा—महाराआ। महिसीसहस्सपरिग्गहो अदुकिदओ तुमं मं विडम्बेसि।

छाया—महाराज! महिषीसहस्रपरिग्रहः अदुःखितस्त्व मां विडम्बयसि।

राजा—

अलमिह दयिते ममाद्य ताभिः
बहुमहिषीपरिभोगवर्णनाभिः।
कथय[29] मधुकरो गुणानुरागी
कलयति चूतलतामिवान्यवल्लीम्॥ २१॥

कनकलेखा—(सलज्जं तिष्ठति)

राजा—(पाणौ गृहीत्वा नायिकामासनार्धे उपवेशयति)

कनकलेखा—करस्पर्शेन पुलकिताङ्गी परावर्तते।

राजा—

प्रतिनवपुलकोद्गमाञ्चिता
तनुरियमम्बुजपत्रलोचने।
अनुहरति कदम्बवल्लरी-
मभिनवकुड्मलकण्टकार्चिताम्॥ २२॥

इति नायकामभिमुखीकरोति।

---

[26] सत्यम्। समागता मे प्रियतमा B.

[27] दर्शिता B.

[28] मत्वा B.

[29] समद B.

कनकलेखा – ण पारआमि महाराअस्स एक्कासणे ठादुम् ।

छाया—न पारयामि महाराजस्य एकासने स्थातुम् ।

राजा—

वरतनु विमुच्य भीतिं
संप्रति कामः सकामतां लभताम् ।
तुङ्गपयोधरसङ्गात्
निर्वृतिमुपयातु मदनसन्तापः ॥ २३ ॥

कनकलेखा—अस्सुअपुव्वाइ साहसाइ भणइ महाराओ (इत्यन्यतो गन्तुमिच्छति)

छाया—अश्रुतपूर्वाणि साहसानि भणति महाराजः ।

राजा—न तावद्गन्तव्यं भवत्या ।

सुधासाम्यकथाजातरोषादिव विपाटलम् ।
तवाधरदलं तन्वि यावन्नास्वाद्यते मया ॥ २४ ॥

(ततः प्रविशति देवी वसुमती चतुरिका च)

वसुमती[30]—हञ्जे चउरिए दंसेहि पमदवणमण्डवमग्गम् जहिं भट्टा वट्टइ ।

छाया—हले चतुरिके ! दर्शय प्रमदवनमण्डपमार्गं यत्र भर्ता वर्तते ।

चतुरिका—इदो इदो भट्टिणी ।

(इति परिक्रामतः)

छाया—इतो इतो भट्टिणी ।

वसुमती—साहसं ।

छाया—साहसम् ।

विदूषकः—(विलोक्य) अविह अविह् । णिदाहसमए पिवासाउळस्स जीअलोअस्सतिह्णं पसमेदुं परिसन्ति काळमेहवन्ति अण्णदो कादुं आअदा अकाळवादूला जदो एत्थ देवी वसुमदी[31] समाअदा ।

छाया—अविध ! अविध ! निदाघसमये पिपासाकुलस्य जीवलोकस्य तृष्णां प्रशमयितुं प्रसरन्तीं कालमेघपङ्क्तिं अन्यतः कर्तुं आगता अकालवातूला । यतोऽत्र देवी वसुमती समागता ।

राजा—(सभयम्) अयि प्रियतमे ! देवी वसुमती मां द्रष्टुमागच्छति । तां यावद्विसर्जयामि तावदस्मिन्नुद्याने कस्मिंश्चिल्लतागह्वरे निगूढा वर्तस्व ।

---

30 देवी A.

31 वसुमई B.

कनकलेखा—तह ।

छाया—तथा ।

(इति निष्क्रान्ता)

वसुमती—(राजानमुपसर्पति)

राजा—(देवीमासनार्धे[32] उपवेशयति)

विदूषकः—भद्दं होदु भट्टिणीए ।

छाया—भद्रं भवतु भट्टिन्याः ।

राजा—किमकाण्डे देव्या उपागमनम् ।

वसुमती—अत्थि किंवि करणम्[33] । अज्जप्पओसे कामदेवस्स पूआ मए णिवत्तिअदि । तहिं तुह अणुमदीए होदव्वम् ।

छाया—अस्ति किमपि कारणम् । अद्य प्रदोषे कामदेवस्य पूजा मया निर्वर्त्यते । तस्मिन् तव अनुमत्या भवितव्यम् ।

राजा—किं कामदेवपूजायाः फलम् ?

वसुमती—कामदेवप्पसादो ।

छाया—कामदेवप्रसादः ।

राजा—निर्वर्त्यतां कामदेवपूजा ।[34] तथैवानुमतिरेतस्य व्रतस्यानुष्ठानाय ।

वसुमती—तह करोमि ।

(इति निष्क्रान्ता)

छाया—तथा करोमि ।

राजा—(विदूषकं विलोक्य) सखे महोदर ।

तृषितस्य चिरं चकोरयूनः
सरसं चन्द्रकलामृतं पिपासोः ।
अतिपातकिनी पयोदमाला
वितनोत्येव महान्तमन्तरायम् ॥ २५

विदूषकः—एव्वं एदम् ।

छाया—एवमेतत् ।

---

[32] आसनार्धं B.

[33] कालणम् A.

[34] मयैव B.

राजा—सखे महोदर! वसुमतीसमागमनात् भीतः प्रियतमामुद्यानमध्यवर्तिनि कस्मिंश्चिल्लतागह्वरे वर्तस्वेति प्रहितवानस्मि ।

विदूषकः—साहु किदम् ।

छाया—साधु कृतम् ।

राजा—तस्याः स्थितिं[35] विचारयितुमुद्यानमध्यं प्रविशावः । (उभौ[36] तथा कुरुतः) अस्मिन्नुद्यानगह्वरे कस्मिन् प्रदेशे सा निगूढा वर्तत इति तावदन्विष्यावः प्रियतमाम् ।

विदूषकः—तह ।

छाया—तथा ।

(इति उद्यानकुञ्जान् प्रत्येकं निरूपयतः[37] । सर्वतो निरूप्य)

वअस्स एत्थ सव्वत्थ गवेसमाणेहिं अह्मेहिं सा ण लक्खिअदि ।[38]

छाया—वयस्य अत्र सर्वत्र गवेषमाणाभ्यां आवाभ्यां सा न लक्ष्यते ।

राजा—(दीर्घमुष्णं च निःश्वस्य) क्व मे प्रिया कनकलेखा स्यात् ।

किं वा सिद्धपुरं व्रजेत् ? अनुमतिर्दत्ता न तस्यै मया
देव्याः किं नु तिरोभवेदनुगमे ?[39] तस्या न किं दृश्यते ।
योगी मन्त्रबलान्नयेत् क्वचिदिमां ? नैवं चरेन्मय्यसौ
नूनं नर्मविधित्सयात्रभवती कुत्रापि लीनाभवेत् ॥ २६ ।

विदूषकः—जदि एव्वं सव्वं उज्जाणं णिरूइवेह्म ।

छाया—यद्येवं सर्वं उद्यानं निरूपयिष्यावः ।

राजा—तथा क्रियताम् ।

(उभौ सर्वमुद्यानदेशं परिक्रम्य तामदृष्ट्वा सावेगं तिष्ठतः)

राजा—(सोन्मादमिव) क्वमेप्रिया कनकलेखा स्यात् ।

विदूषकः—(सविषादम्) पियाए अदंसणेण उम्मत्तओ विअ वअस्सो जाओ ।

छाया—प्रियाया अदर्शनेन उन्मत्त इव वयस्यो जातः ।

राजा—सखे ! महोदर ! इयं मे प्रियतमा पुरो वर्तते ।

(इति हस्तेन निर्दिशन्)

---

[35] उद्याने विचारयितु B.

[36] Only in B.

[37] निरूपयति B.

[38] ऊक्खिअदिण A.

[39] अवगमे B.

आपाटलाधरश्री-
रनङ्कुशाभोगकुचभरावनता ।
आनीलकुन्तलेत्थं
मया प्रिया मञ्जुभाषिणी दृष्टा ॥ २७ ॥

विदूषक:—अम्हो वणराइ एव्व पिआं भावेदि पिअवअस्सो । ता बोधयामि णम् । वअस्स ण एसा पिअअमा वणराई खु इअम् ।

छाया—अहो ! वनराजि एव प्रियां भावयति प्रियवयस्य: । तद् बोधयाम्येनम् । वयस्य ! नैषा प्रियतमा । वनराजि: खल्वियम् ।

राजा—एवमेतत्-
नवकिसलयमेतन्नैव बिम्बाधरोष्ठं
स्तबकयुगळमेतन्नैव वक्षोजयुग्मम् ।
भ्रमरपरिषदेषा संहतिर्नालकानां
परभृतरुतमेतत् भाषितं नैव तन्व्या: ॥ २८ ॥

(किञ्चिदन्तरं परिक्रम्यावलोक्य) अयमालोलपल्लवाङ्गुलीभिराह्वयतीव मामशोकपादप: । (उपसृत्य)
अद्योद्यानगतामशोक सहसा संदर्शय त्वं प्रियां
याच्ञाभङ्गपटीयसा न च पुन: कार्यस्त्वया निह्नव: ।
पादेनाम्बुजकोमलेन सुतनो: संभावितो नासि चेत्
सोऽयं रागमय: कथं नु भवतो नव्य: प्रसूनोद्गम: ॥ २९ ॥

विदूषक:—अम्हो असोअपादवं पुच्छिदुं पउत्तो वअस्सो ।

छाया—अहो अशोकपादपं प्रष्टुं प्रवृत्तो वयस्य: ।

राजा—स्वयमशोकस्सन् कथमयं परकीयं शोकं जानाति[40] ? अन्यतो गच्छामि (तथा कृत्वा) अयमारक्तकण्ठ: कलकण्ठ: सहकारशाखामधिरुह्य मञ्जु कूजति । तमेनं पृच्छामि । (उपसृत्य)
परभृति किमत्र दृष्टा
मम प्रिया त्वमिव मञ्जुलालापा ।
मदनस्य मोहनास्त्रं
प्रथमोदाहरणमङ्गनासृष्टे: ॥ ३० ॥

किं मामनालपन् पञ्चममेव प्रपञ्चयति । अथवा मलीमसात्मनां किमस्ति कृत्याकृत्यविवेक: ।

(अन्यतो गत्वा)

---

[40] न जानाति A.

इयं माधवीलतामधिवसन्ती मधुरमधुरं गायति मधुकरी। (तामुपसृत्य)

अयि मधुपवधूः प्रिया मदीया
किमुपवनेऽत्र विलोकिता त्वयाऽभूत्।
अनुहरति निजत्विषा निकामं
तव सुषमामलकावलिस्तदीया ॥ ३१ ॥

अये इयं[41] मधुपानमत्ता मामनादृत्य गायति। अन्यतो गमिष्यामि। (तथा कृत्वा अग्रतोऽवलोक्य) इयं मे प्रियतमा।

स्मयमानकमलवक्त्रा
मधुमदचलद्विरेफलोलाक्षी।
कण्टकितकोमलाङ्गी
कुड्मलरमणीयकुचभरावनता ॥ ३२ ॥

विदूषकः—अह्मो कमळिणिं एव्व पिआं संभावेदि पिअवअस्सो। ता तक्केमि। गुरुओसेहिअआ वक्खेवोत्ति। ता णं बोधयामि। वअस्स कमलाणी खु इअम्। ण पिअदमा।

छाया—अहो। कमलिनीमेव प्रियां संभावयति प्रियवयस्यः। तत् तर्कयामि गुरुः एष हृदयावस्थेति। तत् तं बोधयामि। वयस्य कमलिनी खल्वियम्। न प्रियतमा।

राजा—किमियं कमलिनी न मे प्रियतमा। क्व मे प्रिया कनकलेखा स्यात्? (इत्यन्यतो गच्छन् अग्रतोऽवलोक्य राजहंसीं निर्वर्ण्य)[42]

रचितगुरुपक्षपाता
रागं भूयो मुखेन संदधती।
रमणीयगतिविशेषा
रमयति मां हन्त राजहंसीयम् ॥ ३३ ॥

(इति पुनः पुनः विलोकयन्) सर्वथैषा मे प्रियतमा।

विदूषकः—अह्मो पिअवअस्सो रुक्खजाइं विहङ्गजाइं वि पुच्छिदुं पउत्तो उम्मादस्स परं कोडिमारूढो। कोवा इमस्सिं अवसरे अवणइस्सदि एअस्स हिअआवक्खेवम्।[43]

---

[41] अयेयं B.

[42] राजा हंसीं निर्वर्ण्य B.

[43] अप्पक्खेपं B.

छाया—अहो प्रियवयस्यो वृक्षजातिं विहङ्गजातिं अपि प्रष्टुं प्रवृत्तः। उन्मादस्य परां कोटिमारूढः। को वा अस्मिन् अवसरे अपनेष्यत्येतस्य हृदयाक्षेपम्।
(ततः प्रविशति आकाशमार्गेण विरूपाक्षसिद्धो योगन्धरश्च)

विरूपाक्षः[44]—वत्स योगन्धर श्रीपर्वतात् किमानीता सिद्धगुळिका ?

योगन्धरः—(सभयम् आत्मगतम्) कथमात्मनः प्रमादं स्वामिने निवेदयामि। अनिवेदने च महान् प्रत्यवायः। (प्रकाशम्) स्वामिन्नानीयमाना सा सूत्रसंयमिता प्रमादतः करतलात् परिभ्रष्टा[45] विजयपुरोपकण्ठवर्तिनि प्रमदवने पतिता आसीत्।

विरूपाक्षः—अहो प्रमादो भवतः। भवतु विजयपुरं गत्वा विजयवर्माणं संभाव्य[46] प्रमदवनपतितां सिद्धगुळिकामन्विष्याव:।[47] (इत्यवतरन् उन्मत्ताकृतिं राजानं दृष्ट्वा) अये योगन्धर किमुन्मत्त इव विभाव्यते विजयवर्मा।

योगन्धरः—एतस्य सहचरो ब्राह्मण एव सर्वं वक्ष्यति।

विरूपाक्षः—(उपसृत्य)......ब्राह्मण किमयमुन्मत्त इव विभाव्यते विजयवर्मा।

विदूषकः—अत्थि कारणम्।

छाया—अस्ति कारणम्।

योगन्धरः—तदुच्यताम्।

विदूषकः—पिअअमाए कणअळेहाए समं पिअवअस्सो आळविदट्ठिओ। तदो देवी वसुमरी आगदा।

छाया—प्रियतमया कनकलेखया समं प्रियवयस्यो आलन् स्थितः। ततः देवी वसुमती आगता।

योगन्धरः—ततस्ततः।

विदूषकः—ताएतदो दंसणं परिहरंतेण वअस्सेण उज्जाणे कणअळेहा पेसिदा। तदो खणं आळविअ देवीए गआए इमं उज्जाणं पविसिअ अण्णे समाणेहिं अह्मेहिं जदा सा ण दीसइ तदा[48] उम्मत्तो जाओ पिअवअस्सो। रुक्खजाइं

---

[44] विरूपाक्षसिद्धः A.

[45] विजयवर्मपुर B.

[46] आसंभाव्य A.

[47] अन्विष्यामः A.

[48] तदो B.

विहंगजाइं पुच्छिदुं पउत्तो पिअवअस्सो अज्ज उण इमं राअहंसिं पिअत्ति बहुमाणयंतो चिट्ठइ ।

(इति राजहंसीं निर्दिशति ।)

छाया—तस्याः ततो दर्शनं परिहरता वयस्येन उद्याने कनकलेखा प्रेषिता । ततः क्षणं आलप्य देव्यां गतायां इमं उद्यानं प्रविश्य अन्वेषमाणाभ्यां आवाभ्यां यदा सा न दृष्टा तदा उन्मत्तः जातः प्रियवयस्यः । वृक्षजातिं विहङ्गजातिं प्रष्टुं प्रवृत्तः प्रियवस्यः अद्य पुनः इमां राजहंसीं प्रियेति बहुमन्यमानः तिष्ठति ।

विरूपाक्षः—योगन्धर ! राजहंस्याः कण्ठे कनकसूत्रसंयमितो मणिः कश्चिदालक्ष्यते[49] ।

योगन्धरः—(निरूप्य) सैवेयं नः सिद्धगुळिका ।

(इत्युपसृत्य तस्याः कण्ठाद् गुळिकामुन्मोचयति)

(ततः प्रविशति तदीयं स्थानमाक्रम्य कनकलेखा)

राजा—(विलोक्य सहर्षम्) सखे महोदर ! सत्यमेवैषा प्रियतमा ।

(इति तस्याः पाणिमवलम्बते ।)

विदूषकः—वअस्स विरूवक्खसिद्धो एत्थ सण्णिहिदो वट्टइ । ता पणामं करेहि ।

छाया—वयस्य विरूपाक्षसिद्धोऽत्र सन्निहितो वर्तते । तत् प्रणामं कुरु ।

राजा—(तं दृष्ट्वा) भगवन् विजयवर्मा प्रणमति ।

विरूपाक्षः—अभिमतसिद्धिरस्तु ।

कनकलेखा—(विरूपाक्षसिद्धं दृष्ट्वा) अज्ज वंदामि ।

छाया—आर्यं वन्दे ।

विरूपाक्षः—वत्से । अभिमतेन युज्यस्व ।

राजा—(अञ्जलिं बद्ध्वा[50]) भगवन् ! तिरोधानपूर्वकोऽयमाविर्भावः प्रियायाः महेन्द्रजालव्यापार[51] इव मां व्यामोहयति । किमस्य कारणम् ?

विरूपाक्षः—श्रूयताम् ।

इयमुपवने देवी भीत्या त्वया विनिवेशिता
सपदि गुळिकां स्रस्तां योगन्धरस्य करादिमाम् ।
अकलयदसौ कण्ठे कौतूहलेन पुनः क्षणा –
दलभत चिरं हंसीभावं तवभ्रमकारणम् ।। ३४ ।।

---

[49] कश्चिद्विद्यते B.

[50] साञ्जलिबन्धं A.

[51] महेन्द्रजाल इव B.

किञ्च –

कण्ठेन धारयन्त्येनां ये प्रमादेन मानवाः ।
तेषामेषा करोत्येव गुळिका तिर्यगात्मताम् ॥ ३५ ॥

राजा—उपपद्यते । अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः ।

विरूपाक्षः—एवमेतत् ।

राजा—(अञ्जलिं बध्वा) भगवन् इमां गान्धर्वेण विवाहेन भवतः सन्निधौ परिणेतुमिच्छामि ।

विरूपाक्षः—नायमनुरूपः पन्थाः । विद्याधरचक्रवर्तिनो वीरवर्मणः कन्यका कनकलेखेयम् । तत्तस्यैव भवने वैदिकेन विधिना एतस्याः पाणिं ग्रहीतुमर्हति[52] । तदियं मदीयेन मन्त्रानुभावेन यथापूर्वं स्वपुरमासादयतु ।

राजा—यथा भगवते[53] रोचते ।

विरूपाक्षः—मन्त्रानुसन्धानमभिनयति ।

कनकलेखा—(राजानं साभिलाषं विलोकयन्ती निष्क्रान्ता)

राजा—(आत्मगतम्)

मन्त्रबलकृष्यमाणां
वृत्तिर्मनसोऽनुयाति मे दयिताम् ।
पवमाननीयमानां
परिमळलुब्धेव मधुकरी मालाम् ॥ ३६ ॥

विरूपाक्षः—राजन् ! मा विषीद । सिद्धपुरं गत्वा वीरवर्मणे निवेद्य भवतो विवाहसामग्रीं संपादयिष्यामि । यत्तत्र विवाहकर्मणि संविधातव्यमस्ति तत्सर्वमस्मदायत्तम् ।[54]

राजा—महाननुग्रहः ।

विरूपाक्षः—अभिमतवस्तुसिद्धये साधयामि ।

(इति तिरस्करिणीमभिनयन् योगन्धरेण सह निष्क्रान्तः)

राजा—(सविषादम्)

सिद्धानुभावभूम्ना
नियतावाप्तावपि सा चिराद्दयिता ।

---

[52] अर्हति A.

[53] भवते A.

[54] अस्मद्दातव्यम् A.

विधिना पुनरन्तरिता
वितरति मे[55] हन्त वेदनां महतीम् ॥ ३७ ॥

(नेपथ्ये)

वैतालिकः—

क्रीडद्दिग्गजहस्तवेगविधुतव्योमापगाम्भःपत-
च्छोणाम्भोजविडम्बिपश्चिमदिशाताटङ्कचक्रोपमः ।
एतत्पक्वदिनद्रुमच्युतफलच्छायं शनैरम्बराद् -
बन्धूकच्छविबिम्बमम्बरमणेरस्ताद्रिमालम्बते ॥ ३८ ॥

राजा—(आकर्ण्य) वयमपि सन्ध्यां वन्दितुं साधयामः ।

(इति निष्क्रान्तः)

(निष्क्रान्ताः सर्वे)

॥ इति तृतीयोऽङ्कः ॥[56]

---

[55] विरहवेदनां A.

[56] तृतीयोऽङ्कः समाप्तः B.

# अथ चतुर्थोऽङ्कः

(ततः प्रविशति विनयन्धरः)

**विनयन्धरः**—

विद्याधरराजसुता
विवाहमङ्गळविवर्धितोत्कण्ठः ।
कथमपि नयति स्वामी
कल्पसहस्रोपमानि दिवसानि ॥ १ ॥

कदा वा पुनरस्य विवाहमहोत्सवः पारं गमिष्यति ।

(ततः प्रविशति योगन्धरः)

**योगन्धरः**—स्वामिनो विरूपाक्षसिद्धस्य निदेशकथनेन विजयवर्माणं विवाहकर्मणे प्रोत्साहयिष्यामि ।

**विनयन्धरः**—(योगन्धरं दृष्ट्वा) अये अयमागतो विरूपाक्षसिद्धशिष्यः योगन्धरः । एतन्मुखात्सर्वमवगन्तव्यम् । (उपसृत्य) अये योगन्धर कुत आगम्यते भवता ।

**योगन्धरः**—सिद्धपुरादागतोऽस्मि ।

**विनयन्धरः**—कथय तत्रत्यमुदन्तम् ।

**योगन्धरः**—अस्मत्स्वामी विरूपाक्षसिद्ध इत्थमाज्ञापितवान् यथा वत्स योगन्धर ! अस्मत्सखः वीरवर्मा गुणान्विताय कुलशीलशालिने विजयवर्मणे वराय स्वदुहितरं कनकलेखां दातुमन्वमंस्त । तदभिमतश्चतुर्दन्तलक्षणो दिग्गजश्च विद्याधरभटैरानीय स्थापितो वीरवर्मणा विजयवर्मणे विवाहसमये दातुं संकल्पितो वर्तते । आगामिन्यां वर्धमानचन्द्रमसि जामित्रगुणोपपन्नायां दशम्यां तिथौ विवाहमङ्गलमहोत्सव इति कार्तान्तिकैः कथितम्[1] । तत्सर्वं विजयवर्मणे निवेदयितुमागतोऽस्मि । त्वया पुनः कुत्र गम्यते ।

**विनयन्धरः**—श्रूयतां स्वामिनो विवाहवृत्तान्तः । तेन सख्या विदूषकेन ज्ञापितवृत्तान्तां (काचित् सखी) तादृशीं तदीयगृहिणीं देवीं वसुमतीमुपेत्य प्रियशंसिनी किल

---

[1] कथित एव । B.

भूत्वा पारितोषिकमभ्यलषत् । तेन च विवाहश्रवणेन विमनायमाना देवी वर्तते । तां समाधातुं कुत्र स्म वर्तत इति ज्ञातुं प्रेषितोऽस्मि देवेन ।

योगन्धरः—यद्येवमस्मिन्नर्थे विजयवर्मणा न खेदः कार्यः । यतः स्वामी विरूपाक्षसिद्ध एव भाव्यर्थवेदी परिहारमुक्त्का प्रेषितवान् ।

विनयन्धरः—यद्येवं सिद्धं नः समीहितम् । कोऽसौ परिहार उच्यताम् ।

योगन्धरः—वत्स योगन्धर ! अस्मदन्तेवासिनः वसुभूतेः दुहिता विजयवर्मणो महिषी वसुमती भर्तुः पुनर्विवाहप्रसङ्गेन विमनायमाना भवेत् । तथाहि –

अभिजनरूपवतीना-
मनितरसामान्यगुरुतरप्रेम्णाम् ।
अन्यासङ्गं पत्युः
महिलानां नैव मानसं सहते ॥ २ ॥

तद्वैमनस्यप्रतिविधानाय सैवमभिधातव्या ।

यथा—वत्से वसुमति ! वसुभूतेर्दुहिता त्वं विद्यासंबन्धवशादस्माकं अन्तेवासिनी । इयं च वीरवर्मणो दुहिता कनकलेखा तथैव । तस्माद्युवामुभे अपि विद्यासंबन्धवशाद् भगिन्यावेव । अतस्तां प्रति भवन्त्या न कोपः कार्यः । प्रत्युत मैत्री कर्तव्येति ।

विनयन्धरः—यद्येवमुत्सवादुत्सवः संपन्नः ।

योगन्धरः—इमं वृत्तान्तं निवेदयितुं मया द्रष्टव्यो विजयवर्मा । स च कुत्र वर्तत इत्यभिधीयताम् ।

विनयन्धरः—नीतिमता मन्त्रिणा सार्धं किमपि मन्त्रयन् अभ्यन्तरमण्टपमधिवसति ।

योगन्धरः—तर्हि विजयवर्माणं विवाहाय प्रोत्साहयितुं वसुमतीं च समाश्वासयितुं साधयामि ।

विनयन्धरः—उत्तमः कल्पः । अहमपि देव्या अवस्थानं ज्ञात्वा देवाय निवेदयितुं गच्छामि[2] ।

(इति निष्क्रान्तौ)

॥ शुद्धविष्कम्भः ॥

(ततः प्रविशति कञ्चुकी)

कञ्चुकी—आज्ञप्तोऽस्मि विद्याधरचक्रवर्तिना वीरवर्मणा । यथा[3] कौशिल्य

---

[2] तामाश्वासयितुं A.

[3] कौशल्य A.

वत्सायाः कनकलेखायाः अद्यतन्यां रजन्यां वैवाहिको मुहूर्तः। अस्मद्गुरोः विरूपाक्षसिद्धस्य मन्त्रसिद्धिमहिम्ना सपरिवारो विजयवर्मा दिवसेनैकेन महान्तमध्वाउमयत्नादतिवाह्य पुरोपशल्यकल्पितां उपचारवतीं उपकार्यां प्राप्य वर्तते। तद् भवता सिद्धपुरनिवासिनः पौराः पुरं परिष्क्रियतामिति नियोक्तव्याः इति। तन्महाराजस्य नियोगमनुतिष्ठामि। (सर्वतः परिक्रम्य) भो भोः पौराः श्रूयताम् राजकीयो निदेशः यथा –

सन्नह्यन्तां—

वितानाः प्रतिभवनमिह श्रेणयस्तोरणाना, मुन्नम्यन्तां
समन्ताद् गगनतललिहः केतनानां[4] पताकाः। सं-
सिद्ध्यन्तां पटीरद्रवभरितजलै वींथयो मुक्तपुष्पाः
प्राप्तोऽयं राजपुत्र्याः परिणयदिवसो विश्वसंमोद हेतुः ॥ ३ ॥

अपि च—

मार्जन्या नयताशु दूरमचिरात् कर्पूरपांसूत्करान्
कस्तूरीसलिलेन सिञ्चत मुहुः सद्यो गृहप्राङ्गणान्।
मुक्ताचूर्णकरङ्गवल्लिरचनायत्ताः प्रतिद्वारकं
संस्थायेषु निधत्त दीप्तमहसो माणिक्यदीपाङ्कुरान् ॥ ४ ॥

(आकाशे)

किं ब्रूथ। प्रागेव भवद्वचनात् अस्माभिर्द्विगुणमाचर्यत इति।

कञ्चुकी—(विलोक्य सहर्षम्) सर्वमेव पुरपरिष्करणं पौरैरारभ्यते। तथा हि –

एषा वन्दनमालिका विरचिता चूतप्रवालैर्नवैः
रम्भास्तम्भपरिष्कृतेषु भवनद्वारेषु संलक्ष्यते।
आमन्द्रध्वनयः क्वणन्ति मुरजा मूर्च्छन्ति तन्त्रीरवाः
शिञ्जानैर्मणिभूषणैस्तत इतो नृत्यन्ति वाराङ्गनाः ॥ ५ ॥

(अन्यतोऽवलोक्य[5])

उत्सर्पदागरवधूपपरंपराभिः
प्रादुर्भवत्यभिनवो जलदागमोऽयम्।
उन्नद्धतोरणमणिप्रभया स्फुरन्त्या
संजायते च शतमन्युशरासनश्रीः ॥ ६ ॥

(पुनरन्यतो दृष्टिं दत्वा)

---

[4] केतकानां B.

[5] विलोक्य A.

धवलारुणमेचककरपाङ्ग-
रपरामारचयन्ति रङ्गवल्लीम् ।
कुचयोर्युगलेन पूर्णकुम्भान्
पुनरुक्तानिव कुर्वते मृगाक्ष्यः ॥ ७ ॥

(सर्वतोऽवलोक्य[6])

विक्षिप्तस्सरभसमेष पौरलोकैः
विस्फूर्जत्कनकरजःपिशङ्गदीप्तिः ।
प्रत्यग्रद्युमणिमयूखजालशोभा-
माधत्ते दिशि दिशि कौङ्कुमः परागः ॥ ८ ॥

तदिदं प्रवर्तमानं पुरपरिष्कारं प्रभवे निवेदयामि ॥

(ततः प्रविशति मध्यमास्थानमण्टपमधिवसन् वीरवर्मा)

वीरवर्मा—(सहर्षम्)

सपदि कनकलेखा यस्य संदर्शनेन
प्रसवशरशराणामेकमासीच्छरव्यम् ।
स इह विजयवर्मा हन्त सिद्धानुभावात्
परिणयविषयेऽद्य प्राप्तवानेव दिष्ट्या ॥ ९ ॥

कञ्चुकी—(उपसृत्य अञ्जलिं बध्नाति)

वीरवर्मा—कौशिल्य ! किं पुरपरिष्कारः प्रवर्तितो भवता ।

कञ्चुकी[7]—अस्मदीयोऽयमुत्सव इति प्रत्येकं पौराणामभिमानः कथं परिहीयते । पुरपरिष्कारः प्रागेवास्मन्निदेशात् सर्वं द्विगुणमाचरितं पौरैः[8] ।

वीरवर्मा—किमप्सरसो विवाहमङ्गलाय समाहूताः समागताः ।

कञ्चुकी[9]—देव श्रूयताम् ।

विद्युद्वल्लीवितानव्यतिकरसुषमां व्योम्नि विस्तारयन्त्यः
कान्त्या नीलोत्पलानां श्रियमिव नयनैरिङ्मुखे दर्शयन्त्यः ।
ज्योत्स्नालक्ष्मीं दिवापि स्मितरुचिविसरैर्विष्वगुत्पादयन्त्यः
सर्वाः स्ववरियोषाः सममभरगणैरागताः प्रीतये नः ॥ १० ॥

---

[6] विलोक्य A.

[7] कौशिल्यः A.

[8] त्वरितं पौरैः B.

[9] कौशिल्यः A.

वीरवर्मा—तर्हि भवानन्तःपुरमेत्य ममागताभिरप्सरोभिः सम्यगलंक्रियतां वत्सा कनकलेखेत्यभिधत्ताम्[10] ।

कञ्चुकी[11]—यदाज्ञापयति स्वामी । (इति निष्क्रान्तः)

(ततः प्रविशति योगन्धरेण सह विरूपाक्षसिद्धः)

विरूपाक्षः—

प्रागन्योन्यविलोकनव्यतिकरादङ्कूरिता वर्धिता
मद्वाचः प्रसरैः मनोभवतरूपघ्नं समासादिता ।
मन्वाकर्षणकर्मजातदयितप्राप्त्या पुनः पुष्पिता
भूयः प्रेमलताद्य राजदुहितुर्दिष्ट्या फलं दास्यति ॥ ११ ॥

(इति वीरवर्माणमुपसर्पति)

वीरवर्मा—(आसनमुपनयति)

विरूपाक्षः—(उपविशति)

वीरवर्मा—(अञ्जलिं बध्वा) भगवन् भवत्संकल्पितोऽर्थः दैवादसौ सफल इव लक्ष्यते ।

विरूपाक्षः—किं परिहीयते विद्याधरचक्रवर्तिनः भवतः ।

वीरवर्मा—तर्हि मौहूर्तिकमानीय निर्णीयताम् वैवाहिको मुहूर्तः ।

विरूपाक्षः—सर्वं संविहितम् । कन्यायाः अलङ्करण[12] मभूद्वा नवेति विचार्यताम् ।

(ततः प्रविशति कञ्चुकी)

कञ्चुकी—(अञ्जलिं बध्वा) स्वामिन्नस्मन्निदेशात् प्रागेवाप्सरसो[13] भर्तृदारिकायाः प्रसाधनं निरविव्रन् ।[14]

वीरवर्मा—कथ्यतां कथमलङ्कृता[15] वत्सा ।

कञ्चुकी—देव श्रूयताम् ।

---

10 आधत्ताम् B.

11 कौशिल्यः A.

12 कन्यालङ्करणम् A.

13 अप्सरोधिः B.

14 प्रसाधनविधिर्निरविव्रन् A.

15 काममलङ्कृता B.

असमग्रभूषणायाः
तनुतरकौशेयवसनधारिण्याः ।
आलिप्तमङ्गमखिलं
तैलेन सुगन्धिना तस्याः ॥ १२ ॥

वीरवर्मा—ततस्ततः ।

कञ्चुकी[16]—
मणिपीठवर्तिनीं तां
मङ्गलशङ्खेषु मन्द्रघोषेषु ।[17]
अम्भोभिरमरनद्याः
सखीजनो विहितमज्जनां व्यतनोत् ॥ १३ ॥

वीरवर्मा—ततस्ततः ।

कञ्चुकी[18]—
मङ्गलमज्जनविशदा
कर्पूरक्षोदपाण्डुरं क्षौमम् ।
साऽधत्त जलदधौता
द्यौरिव शरदिन्दुचन्द्रिकोद्भेदम् ॥ १४ ॥

वीरवर्मा—ततस्ततः ।

कञ्चुकी[19]—
चरणकमलं तदीयं
लाक्षाबालातपेन संवलितम् ।
अध्यास्त भृङ्गमाला
बलभिन्मणिखचितनूपुरव्याजात् ॥ १५ ॥

वीरवर्मा—ततस्ततः ।

कञ्चुकी[20]—
बद्धा मणिमयकाञ्ची
तस्याः परिणाहशालिनि नितम्बे ।

---

[16] कौशिल्यः A.
[17] मञ्जुघोषेषु B.
[18] कौशिल्यः A.
[19] कौशिल्यः A.
[20] कौशिल्यः A.

पङ्क्तिरिव सारसानां
सुरसरितः पुलिनमण्डलाभोगे ॥ १६ ॥

वीरवर्मा—ततस्ततः ।

कञ्चुकी[21]—

हारलता परिणद्धा
कुचकलशे कुङ्कुमारुणे तस्याः ।
सिन्दूरिते करिपतेः
कुम्भे नक्षत्रमालेव ॥ १७ ॥

वीरवर्मा—ततस्ततः ।

कञ्चुकी[22]—

कमनीयतानिवासः
[23]कण्ठस्तस्या विचित्रमणिभूषः ।
सविधप्रसूतरत्नं
शङ्खनिधिं दूरमन्वकरोत् ॥ १८ ॥

वीरवर्मा—ततस्ततः ।

कञ्चुकी[24]—

मुक्ताताटङ्कयुगं
प्रतिमुक्तं कर्णपाशयोरस्याः ।
(कपो)लमिव निषेवितु-
मागतममृतांशुबिम्बयुगम् ॥ १९ ॥

वीरवर्मा—ततस्ततः ।

कञ्चुकी[25]—

आयामिनोस्तदक्ष्णो-
रञ्जनलेखाविधिं वितन्वत्याः ।
पाणिःप्रसाधिकायाः
प्रापदपाङ्गं चिरेण विश्रम्य ॥ २० ॥

---

21 कौशिल्यः A.

22 कौशिल्यः A.

23 कर्णं A.

24 कौशिल्यः A.

25 कौशिल्यः A.

वीरवर्मा—ततस्ततः ।

कञ्चुकी[26]—

तस्या ललाटसीम्नि[27]
चन्दनपङ्केन दिव्यनारीभिः ।
विलिखितमासीत्तिलकं
छायाकरमातपत्रमानङ्गम् ॥ २१ ॥

वीरवर्मा—ततस्ततः ।

कञ्चुकी[28]—

आफलगुलम्बमस्याः
कुन्तलमन्तर्निगूढमन्दारम् ।
संयम्य चतुरबन्धं
सखीजनस्स्तिमितनेत्रमास्त चिरम् ॥ २२ ॥

वीरवर्मा—ततस्ततः ।

कञ्चुकी[29]—

अङ्गं भूषणनिकरः
भूषयतीत्येष लौकिको वादः ।
अङ्गानि भूषणानां
काम्पि सुषमामजीजनन्तस्याः ॥ २३ ॥

वीरवर्मा—भगवन् यद्येवमलंकृता वत्सा किमतः परं कर्तव्यम् ।

विरूपाक्षः—प्रत्यासन्नो वैवाहिको मुहूर्तः । वत्सा च सम्यगलंकृता । तत्समाहूयतां वरः पाणिग्रहणमङ्गलाय ।

वीरवर्मा—(कञ्चुकिनं प्रति) तर्हि समाहूयतां सानुचरो विजयवर्मा ।

कञ्चुकी—तथा ।

(इति निष्क्रान्तः)

(ततः प्रविशति विरहवेषभूषितो वसुमतीविदूषकाभ्यां सह परिमितपरिजनः विजयवर्मा)

---

[26] कौशिल्यः A.

[27] सीमनि A.

[28] कौशिल्यः A.

[29] कौशिल्यः A.

विजयवर्मा—

यामालोक्य मनो मदीयमभवत् कन्दर्पलक्ष्यं पुरा
भूयश्चित्रगतापि या समजनि व्यामोहसंपादिनी ।
नीता मन्त्रबलेन सिद्धमुनिना याऽभूत् परं प्रेयसी
सैवेयं परिणीयते सुतनुरित्यानन्दथुर्मे महान् ।। २४ ।।

(इत्युपसर्पति)

वीरवर्मा—(उत्थाय प्रत्युद्गमनमभिनयति)

राजा—(साञ्जलिबन्धं प्रणमति)

वीरवर्मा—(आश्लेषमभिनयति)

राजा—(विरूपाक्षसिद्धं दृष्ट्वा प्रणमति)

विरूपाक्षः—अभिमतदयितासमागमसुखमनुभूयाः ।

वसुमती—(प्रणमति)

विरूपाक्षः—अभिमतभगिनीसंदर्शनसुखमनुभूयाः ।

पुरोहितः—(प्रविश्य) प्रत्यासन्नः मुहूर्तः । तदाहूयतां वत्सा ।

(ततः प्रविशति कोकिलकण्ठी-शुकालापिनीभ्यां सह कनकलेखा)

कनकलेखा—(आत्मगतम्) एत्तिअस्स काळस्स दाणि खु मे मणोरहकप्पद्दुमो फळंदंसेइ ।

छाया—एतावता कालेनेदानीं खलु मे मनोरथकल्पद्रुमो फलं दर्शयति ।

राजा—(विलोक्य, आत्मगतम्)

विरचितवेषाश्लेषा
संपन्न[30] भूषाविशेषरमणीया ।
प्रतिभाति मानसे मे
मदनसहस्राणि कल्पयन्तीव ।। १५ ।।

कोकिलकण्ठी—हळा ! कणअळेहे ! णईपवाहंमि तिणेणाविआविअ वअं एह्लि जाआ ।

छाया—हला कनकलेखे ! नदीप्रवाहे स्थिते नाविके (नौके) इव आवां इदानीं जाते ?

---

30 मणिमय B.

कनकलेखा—(सासूयम्) कहंविअ ।

छाया—कथमिव ।

कोकिलकण्ठी—एत्तिअं काळं अह्मे तुह पिअसहीओ । इदो वरं दीवीअ अपम्मरा ओत्ति भणामि ।

छाया—इयन्तं कालं आवाम् तव प्रियसख्यौ । इतः परं देव्याः (सेविके ?) (विस्मृते) इति भणामि ।

कनकलेखा—(शुकालापिनीं प्रति) हळा सुआळाविणि कआवि ण मुंचइ एसा कोइळकंठी वक्काळाविणित्तणम् ।

छाया—हला शुकालापिनि कदापि न मुञ्चति एषा कोकिलकण्ठी वक्रालापिनीत्वम् ।

शुकालापिनी—कहं विमुञ्चअदि आजाणसिद्धो सहावो ।

छाया—कथं विमुच्यते आजन्मसिद्धः स्वभावः ।

विद्याधरभटाः—(प्रविश्य) स्वामिन्नितोऽप्यमैरावतः ।[31] पश्य ।

दन्तस्तम्भचतुष्टयोपरिगतः पद्मासनालंकृतो
विभ्राणो मणिपूर्णकुम्भयुगलीसंशोभमानं मुखम् ।
लक्ष्मीमण्टपतामिव प्रथयता देहेन संसूचयन्
प्राप्तो दिव्यगजस्तवातिशयिनीमागामिनीं संपदम् ॥ १६ ॥

वीरवर्मा—दिव्यगजं विजयवर्मणे दर्शयति ।

राजा—(विलोक्य विस्मयते)

विदूषकः—ऐरावणणामहेओ गओ सुणीअदि । सो दाणिं पच्चक्खी किदो इमस्स दंसणेण ।

छाया—ऐरावणनामधेयो गजः श्रूयते । स इदानीं प्रत्यक्षीकृतः अस्य दर्शनेन ।

विरूपाक्षः—वत्से वसुमति ! भगिनीं कनकलेखां सादरमालिङ्गनेन संभावय ।

वसुमती—तह ।

छाया—तथा ।

(इति कनकलेखामालिङ्गति)

कनकलेखा—(प्रत्यालिङ्गति)

---

[31] ऐरावतकः A.

पुरोहितः—(अग्निमुपसमाधाय) वधूवरौ अस्मिन् भद्रासने प्राङ्मुखौ[32] वर्तेताम् ।

उभौ—(तथा कुरुतः)

पुरोहितः—राजन् स्वकीयेन पाणिना वध्वाः पाणिं अवलम्बस्व ।

राजा—(तथा कृत्वा पुलकितां नायिकां निर्वर्ण्य आत्मगतम्)

आभाति बालिकेयं
पाणिस्पर्शेन पुलकितावयवा ।
अभिनववसन्तसङ्गा-
दाविर्मुकुळेव बालचूतलता ॥ १७ ॥

पुरोहितः—उभावग्निं प्रदक्षिणीकुरुतम् ।

उभौ—(तथा कुरुतः)

पुरोहितः—(पाणिना लाजाञ्जलिं करोति)

कनकलेखा—(धूमाक्रमणवैक्लब्यं रूपयति)

राजा—(आत्मगतम्)

प्रस्विन्नफालतिलकं च्युतपत्रलेखं
धूमानुषङ्गगलिताञ्जनपाटलाक्षम् ।
अस्या मुखं दरविवर्तितगण्डरेखं
चित्ते ममार्पयति कामविरागमुद्राम् ॥ १८ ॥

कनकलेखा—(राजानं विलोकयन्ती तिष्ठति)

राजा—(प्रत्यवलोकयति)

कनकलेखा—(दृष्टिं परावर्तयति)

राजा—(आत्मगतम्)

अवलोकनाय लोला
दृष्टिरियं मृगदृशो निवृत्तिमती ।
परिमळचलिता भूयः
प्रतीपमरुतेव वारिता भ्रमरी ॥ १९ ॥

पुरोहितः—(कर्मशेषं समापयति)

---

32 प्राङ्मुखं A.

वधूवरौ—(विरूपाक्षसिद्धं प्रणमतः)

विरूपाक्षः—(हस्तमुद्यम्य) अविरहितौ दम्पती भूयास्तम् ।

वृद्धपुरन्ध्र्यः—(प्रविश्य)

अण्णोण्णसमसिरीणं
अण्णोण्णपरूढगाढपेम्माणम्[33]
जोह्णानिसाअराविअणं
एदाणं[34] होदु कोवि अणुराओ ॥ २० ॥

(इत्याद्रक्षिता रचयन्ति[35])

छाया—

अन्योन्यसमश्रियाः
अन्योन्यप्ररूढगाढप्रेम्णोः ।
ज्योत्स्नानिशाकरयोरिव
एतयोर्भवतु कोप्यनुरागः ॥

विदूषकः—(योगन्धरं प्रति) जोअंधरत्ति सद्दमेत्तं तुमं वहमि । एओ उण अत्थो एदेसु वहूवरेसु वट्टइ । (सर्वे स्मयन्ते)

छाया—योगन्धर इति शब्दमात्रं त्वं वहसि । एषपुनरर्थः एतयोर्वधूवरयोः वर्तते ।

(राजा वसुमती च विद्याधरभावमासादयतः)

विरूपाक्षः—(हस्तेन निर्दिशन्) सर्वे पश्यन्तु । अयमिदानीं विजयवर्मा ।

केयूरहारमकुटीमणिकुण्डलाद्यै-[36]
रुद्द्योतमानतनुराभरणैरभूमैः ।
तेजःपुषा च वपुषा जनलोचनाना-
मानन्दथुं कमपि चाक्षुषमातनोति ॥ २१ ॥

इयं च वसुमती रूपान्तरमापन्ना[37] ।

---

[33] अण्णोण्णपरूढपेम्मभराणम् (प्रेमभराणाम्) B.

[34] तुम्हाणं (युवयोः) B.

[35] इत्याद्रक्षितारोपणमाचरन्ति B दोषानिशाकराविव ?

[36] केयूरहारविलासन्मणिकुण्डलाद्यैः B.

[37] रूपावस्थामापन्ना B.

वीरवर्मा—(सविस्मयम्) भगवन् विरूपाक्षसिद्ध कावेतौ ?

विरूपाक्षः—श्रूयताम् । अयं तावत् केयूरको नाम विद्याधरः । इयं च केयूरिका नाम विद्याधरी ।[38]

वीरवर्मा—उभयोर्मानुषीभावस्य किं निमित्तम् ।

विरूपाक्षः—गन्धमादनगिरेः गह्वरे कृतसन्तापावेतौ यदृच्छागतमक्रोधनं तपोधनमवज्ञाय मानुषीभावविधायिनः शापस्य भाजनमभूताम् । स च तपोधनः व्यपगतक्रोधः प्रशान्तः कनकलेखाकरग्रहणावधि शापमकल्पयत् ।

(सर्वे विस्मयं रूपयन्ति)

(विरूपाक्षः हस्तमुद्यम्य)

युवयोः[39] शापनिर्मोक्षप्रत्युत्पन्नस्वरूपयोः ।
आचन्द्रतारमारूप्यमस्तु वैद्याधरं पदम् ॥ २२ ॥

राजा—(विजयवर्मा) महान् अनुग्रहः । भगवन् यद्येवमनुगृहीतोऽस्मि तर्हि सह दिव्यगजेन विद्याधरसाम्राज्यं दत्तम् ।

राजा (विजयवर्मा)—(प्रतिगृह्णाति)

विरूपाक्षः—अहमप्यस्य विद्याधरभावमाकलय्य कनकलेखां दापितवानस्मि ।

वीरवर्मा—किं प्रमाद्यन्ति[40] परमात्मवेदिनः महापुरुषाः ।

राजा—भगवन् भवदनुग्रहेण सर्वे मनोरथाः संपूर्णाः ।

तथाहि—

पुत्री संप्रति वीरवर्मनृपतेः पाणौ कृतेयं मया
प्राप्तो[41] दिव्यगजोऽच्युतं पदमपि प्राप्तोऽस्मि वैद्याधरम् ।
या विद्याधरचक्रवर्तिपदवी साप्येवमासादिता
किं वान्यत् पुनरर्थनीयमिह नः प्राप्ते तवानुग्रहे ॥ २३ ॥

तथापीदमस्तु भरतवाक्यम्

पर्जन्योऽयं वृष्टिमिष्टां विधत्ताम्
राजानः क्ष्मां पालयन्तामविघ्नम्[42] ।

---

[38] तत्सहोदरी (?) B.

[39] शापनिर्यास A.

[40] परात्मवेदिनो B.

[41] प्राप्तो दिव्यगजो B.

[42] अविघ्ना: A.

वाचां देवी वर्धतां सत्कवीनां
सन्तोषाब्धौ सन्तु सन्तो निमग्नाः ॥ २४ ॥

(इति निष्क्रान्ताः सर्वे)

॥ चतुर्थोऽङ्कः समाप्तः ॥

इति श्रीमद्वत्सकुलतिलकगद्यकविसार्वभौम-
षड्भाषावल्लभसाहित्यसाम्राज्यधुरन्धर-
श्रीवामनभट्टबाणविरचितं कनकलेखा-
कल्याणंनामनाटकं समाप्तम् ॥

शुभमस्तु

# श्लोकानुक्रमणिका